*Samskrita Avatara Series No. II*

श्रीः

# SANSKRIT SECOND READER

BY

**Pandit, V. R. T. THATHACHARIAR**

*Senior Sanskrit Teacher*

BOARD HIGH SCHOOL, NANNILAM

नन्निलवर्त्याङ्गलकलाशालाप्रधानसंस्कृताध्यापकेन

श्रीशैलताताचार्येण

विरचितः

॥ संस्कृतावतारः ॥

( द्वितीयो भागः )

**THE INDIAN PUBLISHING HOUSE, LTD.,**

**MADRAS**

*Price 5 Annas]* 1926 

*Approved by the Director of Public Instruction, Madras, for use in all (Secondary and Sanskrit) Schools.*

*Samskrita Avatara Series No. II*

# SANSKRIT SECOND READER

BY


Pandit, V. R. T. THATHACHARIAR

*Senior Sanskrit Teacher*

BOARD HIGH SCHOOL, NANNILAM

नन्निलवत्याङ्गलकलाशालाप्रधानसंस्कृताध्यापकेन

श्रीशैलताताचार्येण


विरचितः

## ॥ संस्कृतावतारः ॥

## ( द्वितीयो भागः )


**THE INDIAN PUBLISHING HOUSE, LTD.,**

**MADRAS**

*Price 5 Annas*] 1926



*Approved by the Director of Public Instruction, Madras, for use in all (Secondary and Sanskrit) Schools.*

॥ श्रीः ॥

# ॥ संस्कृतावतारः ॥

## [द्वितीयो भागः]

नमः परमकारुण्यशालिने श्रितबन्धवे ।
जानकीनयनानन्ददायिने रघुसूनवे ॥

LESSON I (प्रथमः पाठः)

### ॥ गुरूपदेशः ॥

आचार्यः अन्तेवासिन माज्ञापयति । सत्यं वद । धर्मं चर । सत्यान्न त्वं प्रमत्तो भव । धर्मान्न त्वं प्रमत्तो भव । कुशलान्न त्वं प्रमत्तो भव । देवपितृकार्याभ्यां न प्रमत्तो भव । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । यान्यनवद्यानि कर्माणि, तानि कर्तव्यानि । न इतराणि । यान्यस्माकं सुचरितानि, तानि त्वया कार्याणि । न इतराणि । एष आदेशः । एष उपदेशः इति ।

## LESSON II (द्वितीयः पाठः)

## ॥ काकवर्तकौ ॥

एकदा भगवतो गरुडस्य यात्राप्रसंगेन सर्वे पक्षिणः समुद्रतीरमगच्छन् । तदा काकेन सह वर्तकः प्रस्थितः । मध्येमार्गं गच्छतो गोपालस्य दधिभाण्डादनेकवारं स काकः दधि खादति स्म । ततो यावदसौ दधिभाण्डं भूमौ निधाय ऊर्ध्वमालोकते, तावत्तेन काकवर्तकौ दृष्टौ । परन्तु द्रुतगतिस्स काकः सद्यः पलायितः । स्वभावानिरपराधो मन्दगतिर्वर्तकस्तु तेन प्राप्तः, व्यापादितश्च । अतः "न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्" ॥

LESSON III (तृतीयः पाठः)

## ॥ वाङ्मनसे ॥

कदाचित् वाक्च मनश्च मिथः कलहमकुरुतां। तदा अहमेव देवेभ्यो हव्यं वहामीति वागब्रवीत्। अहं देवेभ्य इति मन आचख्यौ। ते द्वे अपि चतुर्मुखस्य समीपं गत्वा आवयोः को वरीयान् इति तमपृच्छताम्। ब्रह्मा तु वाचं समीक्ष्य "त्वं मनसो दूत्येवासि। यत्पुरुषो मनसा ध्यायति, तद्वाचा वदति" इत्यवदत्। ततः अतीव कुपिता वाक् "तत्खलु तुभ्यमितःपरं पुरुषा न वाचा होष्यन्ति" इत्यब्रवीत्। तत आरभ्य अद्यापि लोके द्विजाः धातारं मनसा ध्यायन्तः तस्मै मनसैव जुह्वति॥

LESSON IV (चतुर्थः पाठः)

## ॥ काकहंसौ ॥

पुरा उज्जयिनीमार्गे महान्प्लक्षतरुरासीत्। तस्मिन्काकहंसौ निवासमकुरुतां। ग्रीष्मसमये परिश्रान्तः कश्चन पथिकस्तस्य तरोरधश्छायायां धनुर्निधाय सुखं स्वपिति स्म। ततः क्रमेण तस्य मुखाद्वृक्षच्छाया अन्यत्रापगता। ततः सूर्यतेजसा तन्मुखं तप्यमानमालोक्य तद्वृक्षस्थो हंसः कृपया पक्षौ प्रसार्य पुनस्तन्मुखे छाया-मकरोत्। ततः पान्थो निर्भरं निद्रासुखमनु-भवति स्म। अथ परसुखासहिष्णुस्स्वभाव-दुष्टस्स काकस्तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितः। अनन्तरं यदाऽसौ पथिकः प्रबुद्ध्योर्ध्वमवलोकयामास, तदा हंसस्तेन दृष्टः। सद्यस्स पान्थो हंस एवाऽपराधीति मत्वा तेन धनुषा तमताडयत्। स च विनष्टः। अतश्च "न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्"॥

LESSON V (पंचमः पाठः)

## ॥ राजभक्तिः ॥

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ २ ॥
नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यं वहति पावकः ॥ ३ ॥
एकस्य तु प्रसादेन सर्वो लोकः प्रसीदति ।
व्याकुले चाकुलस्सर्वो भवतीति सुनिश्चयः ॥४॥
यस्य प्रसादे पद्मास्त विजयश्च पराक्रम ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥५॥
सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तमेव सेवेत न व्यळीकेन कर्हिचित् ॥६॥
सर्वदेवमयस्यापि विशेषो भूपतेरयम् ।
शुभाशुभफलं सद्यः नृपात् देवाद्भवान्तरे ॥ ७ ॥

तस्मादस्माभी राजनि भक्तिमद्भिर्भवितव्य-मिति फलति ॥

## LESSON VI (षष्ठः पाठः)

## ॥ वायसदंपती ॥

एकदा कस्मिंश्चित्तरौ वायसदंपती न्यवसताम् । तयोरपत्यानि तद्वृक्षकोटरवर्तिना कृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी भर्तारं प्रत्यब्रवीत् । "नाथ ! तरुरयं त्यज्यतां । एतद्वृक्षस्थस्सर्प आवयोरपत्यानि सततं भक्षयती" ति । वायस आह । "प्रिये ! न भेतव्यं बहुवारं मयैतस्य महापराधः क्षान्तः । इदानीं पुनर्न सोढुं शक्यते" इति । वायस्यपृच्छत् "कथमेतेन बलवता सह भवान् योद्धुं समर्थः" इति । वायसः प्रत्यवदत् । "पश्य । बुद्ध्या सर्वं साधयामि । अस्य तरोरासन्न सरसि राजपुत्रः प्रतिदिनमागत्य स्नाति । स स्नानसमये

कनकसूत्रं तदङ्गादवतार्य सोपाने निक्षिपेत् । त्वं चञ्च्वाऽपहृत्यानीयास्मिन्कोटरे प्रक्षेप्स्यसि यदि, तदा सर्वं समीहितं साधु सिध्येत्" इति । अथ राजपुत्रः स्नानार्थमागत्य कनकसूत्रं सोपाने निक्षिप्य जले स्नाति स्म । वायसी च तत् चञ्च्वापहृत्य कोटरे प्राक्षिपत् । सद्यः कनकसूत्रानुसारिणो राजभटास्तरुसमीपमागत्य कोटरस्थं सर्पं निहत्य कनकसूत्रमादायागच्छन् । अनन्तरं वायसदंपती सुखमवसतां । अनया कथया "उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमै" रिति स्पष्टमवगम्यते ॥

LESSON VII (सप्तमः पाठः)

## ॥ अहिंसा

लोके केचन मानवा अनपराधिनो जन्तून्निहत्य तेषां मांसानि भक्षयन्ति । तदतीवानुचितम् । मांसं हि शरीरान्तर्गतैरशुद्धवस्तुभिरुत्पाद्यते ।

तस्योत्पत्तिप्रकारं यदि सम्यक्परामृशेयुर्न तन्मनसापि स्मरेयुः । अत्यन्तं जुगुप्सनीयस्य मांसस्य कृते मरणभीतान् वेपमानानपि तान्प्राणिनो घ्नन्ति । अनिष्टं किल मरणं सर्वेषां भूतानाम् । अन्येनात्मनः प्रहारे कियद्दुःखं स्यादित्येतन्न ते चिन्तयन्ति । येषां भूतानां मांसं ये भक्षयन्ति, तैर्भूतैर्जन्मान्तरे तेऽपि भक्ष्येरन् । "मांस भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् । एतन्मांसस्य मांसत्वम्" इति मांसपदं व्युत्पादयति भगवान् वेदव्यासः । अहिंसा परमो धर्म इति सर्वेषां मतः । अतः परहिंसा सर्वथा न कर्तव्या ।

## LESSON VIII (अष्टमः पाठः)

## ॥ हिंसाफलम् ॥

पुरा बृन्दावनस्य समीपे ताळवनमेकमासीत् । तत्र धेनुकादयः केचिदसुरा रासभरूपमास्थाय मृगान्व्यापाद्य भक्षयामासुः । बृन्दावननिवासिनो

गोपास्तस्मिन्वने बालतृणोदकादिसमृद्धिमवगच्छन्तोऽपि रासभेभ्यो भिया गाः न चारयन्ति स्म। एकदा गोपालाः श्रीकृष्णं बलरामं चालोक्यैवमूचुः। "ताळवने सुगन्धीनि स्वादूनि बहूनि फलानि सन्ति। तानि वयमास्वादयितुमिच्छामः। परन्तु गर्दभसकाशं गन्तुमतीव बिभीमः। तानि फलानि युवामधः पातयतम्" इति। तौ तथेत्युक्त्वा गोपैस्सह ताळवनमागत्य लोष्टादिना ताळफलान्यपातयतां। अधः पततां फलानां शब्दमाकर्ण्य गर्दभाकारो धेनुकः सञ्जातरोषः त्वरितमागत्य पश्चिमाभ्यां पादाभ्यां बलराममुरसि जघान। बलरामस्तु तं पश्चिमयोः पादयोर्गृहीत्वा, वेगेन भ्रामयित्वा ताळफलोपरि प्राक्षिपत्। स च सद्यो जीवितं जहौ। अतिस्थूलशरीराभिघाताद्बहूनि फलान्यपतन्। वासुदेवोऽपि तत्र विद्यमानानन्यानसुरगर्दभान् गृहीत्वा ताळफलोपरि दृढमभिजघान। तेन च

बहूनि फलानि पतन्ति स्म । गोपाश्च "दुष्टा गर्दभा विनष्टाः। इष्टानि फलानि लब्धानि चे" त्यतीव तुष्टा बभूवुः । ततः प्रभृति तद्वनं गोपालानां गवां च संचारादियोग्यमभवत् । प्राणिहिंसया किल दैत्यगर्दभा विनष्टाः । तस्मात्सर्वैरपि हिंसामकुर्वाणैर्भाव्यम् ॥

LESSON IX (नवमः पाठः)

## ॥ त्रयो दुर्जनाः ॥

पुरा गौतमारण्ये कश्चन विप्रो यागं कर्तुमिच्छति स्म । स च तदर्थं ग्रामान्तरादजमेकं क्रीत्वा स्कन्धे धृत्वा समागतः । मार्गमध्ये त्रिभिर्धूर्तैरवलोकितः । ततस्ते धूर्ताः "यद्येष छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षः प्रकटीकृतो भवेत" इत्यालोच्य मिथः क्रोशदूरव्यवहितानां पथि स्थितानां त्रयाणां वृक्षाणामधः प्रत्येकं विप्रागमनं प्रतीक्ष्य स्थिताः । ततः

समागच्छन्तं द्विजमालोक्य अग्रिमो धूर्त इत्थमब्रवीत् । "भो विप्र ! किमिति श्वानं स्कन्धे वहन् गच्छसि" इति । द्विजस्तु—"नायं श्वा आपं तु यज्ञच्छागः" इत्यवदत् । अथानन्तरवृक्षस्थः अन्यो दुर्जनश्च ब्राह्मणं निरीक्ष्य तथैवावदत् । तदाकर्ण्य विप्रः छागं भुवि निधाय मुहुर्मुहुर्निरीक्ष्य तं पुनः स्कन्धे धृत्वा दोलायमानमतिश्चलितः । ततस्तदनन्तरतरुतलवर्ती तृतीयो दुष्टश्च तथैव विप्रमवादीत् । अन्ततो द्विजस्तमजं श्वानमेव मत्वा तं भूमौ निपात्य नद्यां स्नात्वा गृहमगच्छत् । ततस्ते धूर्ता अजमादाय गृहं गत्वा सन्तोषेण भक्षयामासुः । अतो दुर्जनवचासि कदापि न विश्वासः कार्यः ॥

LESSON X (दशमः पाठः)

## ॥ वेदचतुष्टयसंवादः ॥

कदाचिद्वेदाश्चत्वारोऽपि स्वस्वाभिप्रायमाविश्चक्रुः । तदा ऋग्वेद इत्थमाह—

"अग्निहोत्रिणो गृहस्थस्य गृहं सायमागतोऽतिथिरुपेक्षितश्चेत्तदीयं सुकृतं सर्वमप्यादाय गच्छती"ति ।

यजुर्वेद एवमुवाच—

"विप्रस्य मुखे कृतोऽन्नहोमः नान्यत्र निपतति, न ह्रसति, नास्य धूम उपरि गच्छति, ततोऽयमग्निहोत्रादुत्तम" इति ।

सामवेद इत्थमब्रवीत्—

"प्रीतोऽतिथिः मातापितृविप्रवधात् परापवादोत्थापनाच्च जायमानं पापं विना पुरुषस्यान्यत्सर्वं दुरितमपहन्ती" ति ।

अथर्ववेद एवमवदत्—

"क्रोधनेन अनुष्ठितं तपोयागदानहोमादिकं सर्वमपि वैवस्वतो हरते। क्रोधनस्य कृत्यं सर्वमपि विफलं भवति" इति।

अनेन वेदसंवादेनातिथिरनुपेक्षणीय इति कोपो दूरीकर्तव्य इति च फलति ॥

LESSON XI (एकादशः पाठः)

## ॥ बककुळीरकौ ॥

कस्मिंश्चिदरण्ये बहुभिर्बकैरध्युषितः कश्चन वटवृक्ष आसीत्। तस्य कोटरे कृष्णसर्पो वसति स्म। स च सर्पो बकबालानजातपक्षानपि भक्षयन् कालमनयत्। अथैको बको नष्टशिशुर्वैराग्यात्सरस्तीरमासाद्य बाष्पपूर्णनयनः अधोमुख आसीत्। तथास्थितं तमालोक्य कश्चन कुळीरक एवमपृच्छत्। "किमेवं रुद्यते भवता" इति। स आह-- "भद्र! किं करोमि?। मन्द-

भाग्यस्य मम बालकाः कोटरनिवासिना कृष्ण-सर्पेण भक्षिताः। ततो दुःखितोऽहं रोदिमि। तं कथय मे यद्यस्ति यः कश्चिदुपायस्तद्वि-नाशाय" इति। तदाकर्ण्य कुळीरकश्चिन्तयामास। अयं बकस्तावदस्माकं जातिवैरी। ततस्तथोपदेशं करोमि, यथान्येऽपि बकास्सर्वे नश्येयुः" इति। आह स्म च—भद्र! यद्येवं, मत्स्यमांसशकलानि नकुलस्य बिलद्वारात् सर्प-कोटरपर्यन्तं प्रक्षिप। तथासति नकुलस्तन्मार्गेण गत्वा तं कृष्णसर्पं विनाशयेदि" ति। तथा-ऽनुष्ठिते मत्स्यमांसानुसारी नकुलस्तं कृष्णसर्पं निहत्य तद्वृक्षवासिनः सर्वान्बकांश्च क्रमे-णाभक्षयत्। अतः "उपायं चिन्तयेत्प्राज्ञस्त-थापायं च चिन्तयेत्" ॥

LESSON XII (द्वादशः पाठः)

## ॥ स्त्रीधर्मः ॥

स्त्री तावत्, समुचिते वयसि रामायणमहाभारतादिकं पठितुमर्हति । अनुरूपाय पुरुषाय यथाविधि दातुं चार्हा भवति । तस्याः प्रदाने पितृ, पितृव्य, मातृ, भ्रातृ, मातुला अधिकारिणो भवन्ति । यथाविधि तैर्दत्ता स्त्री समुचिते काले पतिमधिगत्य ततः प्रभृति सादरं तमुपचरेत् । अनुदिनं पत्युः पूर्वं प्रबुध्य प्रातः कर्तव्यमाचरेत् । पत्युरभिप्रायं ज्ञात्वा तं प्रबोधयेत् । कीदृश आहारोऽभिमत इति तं पृष्ट्वा तथैव कुर्यात् । तद्गुरूनपि सर्वदा शुश्रूषेत । पत्युर्बहिर्गमने रामायणादिपठनं तन्तुवयनादिकम् शिल्पव्यापारं वा कुर्यात् । आगते च पत्यौ प्रीत्या पाद्यासनादिकं वितीर्य यथा तस्य शरीरश्रमो निवर्तेत तथोपचरेत् । धर्मकार्ये संप्राप्ते पतिवद्धर्मपरा भवेत् । तस्याप्रियं मन-

सापि न चिन्तयेत् । पुरुषेण महता कायक्लेशेन लभ्यं फलं सर्वमपि, स्त्री पतिपूजया विनैव कायक्लेशं लभते । एतदुद्दिश्यैव जन्मसु स्त्रीजन्म प्रशस्तमिति पुराणादीन्युद्घोषयन्ति । तस्मात्स्त्री यथा स्वस्य लोकाश्शुभाः सुलभा भवेयुस्तथा पतिमुपचरेत् ॥

LESSON XIII (त्रयोदशः पाठः)

## ॥ स्त्रीणां पतिरेव दैवतम् ॥

पुरा कस्यचिद्विप्रस्य द्वे भार्ये बभूवतुः । तयोरेका धर्मकामा पतिमवमत्यैव देवान्भक्त्या पूजयामास । अपरा तु धर्मपरा सती भर्तारं दैवतं मत्वा तत्प्रियं चकार । एवंवर्तमाने ते युगपन्मृत्वा परलोकमगमताम् । तयोः पति-प्रिया देवप्रियायां तिष्ठान्त्यां पुण्यलोकमभजत् देवप्रिया तु तिष्ठन्ती भृशं विललाप । तदा

यमस्तामवलोक्येत्थमकथयत् "भर्तारमवमत्यैव स्थितायास्तव शुभा लोका न सन्ति। स्त्रीणां पतिरेव दैवतमिति देवताभिः सर्वाभिरपि स्थापितम्। तस्मादितो निवृत्य पतिप्रियं कुरुष्व। एवं चेत्पतिव्रतासुलभान् पुण्यलोकान् गमिष्यसी" ति। यमेनैवमुक्ता सा पुनर्निवृत्य पतिमालम्ब्य तत्प्रियमेवाकरोत्। अन्ते च शुभान् लोकान् जगाम। तस्मान्नारी पतिमेव दैवतं मत्वा पूजयेत्॥

## LESSON XIV (चतुर्दशः पाठः)

## ॥ विप्रनकुलौ ॥

एकदा उज्जयिन्यां माधवो नाम विप्र आसीत्। तस्य भार्या कदाचिदपत्यसंरक्षणाय भर्तारमवस्थाप्य स्नानार्थं नदीं जगाम। तदा कश्चन राजसेवकः समागत्य विप्रं राजगृहश्राद्धप्रतिग्रहणाय समाह्वयत्। तच्छ्रुत्वा ब्राह्मणः

सहजदारिद्र्यादेवमचिन्तयत् । "यदि सत्वरं न गच्छेयं तदान्यः कश्चित् श्राद्धं प्रतिग्रहीष्यति । किंतु बालकस्यास्य रक्षको नास्ति । तत्किं करोमि । अस्तु । चिरकालपालितं पुत्रनिर्विशेषमिमं नकुलं बालरक्षणायावस्थाप्य गच्छामी"ति । ततस्तथैव कृत्वा द्विजो गतः । अनन्तरं समीपस्थबिलात् कश्चन कृष्णसर्पो निर्गत्य शिशुसमीपमाजगाम । तदा स नकुलस्तं नागं दृष्ट्वा महता कोपेन तं व्यापाद्य खण्डशश्छिनत्ति स्म । तदनन्तरमसौ नकुलः समायान्तं विप्रमालोक्य रक्तविलिप्तमुखपादः सत्वरमुपागम्य तत्पादयोरलुठत् । तदा स विप्रस्तथाविधं तं दृष्ट्वा बालकोऽनेन खादित इति निश्चित्य नकुलं व्यापादितवान् । अनन्तरं यदा स विप्रः अपत्यसमीपमागत्य तं बालं सुखेन स्वपन्तमपश्यत्, तदैव महति विषादसागरे निमग्नः । तत्र निहतसर्पखण्डानि च संदृष्टवान् । तत-

स्तमुपकारकं नकुलं पदे पदे विचिन्त्य करुणार्द्र-चेता नितरां विषीदति स्म। तस्मात्तत्त्वमविज्ञाय क्रोधेन न किञ्चिदपि कार्यम्

LESSON XV (पञ्चदशः पाठः)

## ॥ लक्ष्मीनिवासः ॥

जातुचित् रुक्मिणी भगवतः कृष्णस्य सन्निधौ तदङ्कगतां महालक्ष्मीं दृष्ट्वैवमपृच्छत् । "त्वं केषु भूतेषु वससि । केषु ने" ति । एवं पृष्टा पद्मा तां प्रत्युत्तरमेवं ददौ "पुरुषेषु-सुन्दरे, धृष्टे, समर्थे, कर्मोद्युक्ते, जितक्रोधे, देवपरे, कृतज्ञे, जितेन्द्रिये, सात्विके, धर्मशीले, सज्जनसेविनि, दान्ते, कालं सफलीकुर्वति, दानशुद्धिरते, ब्रह्मचारिणि, तपस्विनि, ज्ञानिनि, गोद्विजादिप्रिये च पुरुषे, अध्ययनअध्यापन-निरते द्विजे, धर्माभिरते क्षत्रिये, कृष्यासक्ते वैश्ये, स्वधर्मानुसारिणि शूद्रे च नित्यमहं

वसामि। तथैव स्त्रीषु--कान्तायाम्, शान्तायाम्, क्षान्तायाम्, देवपरायाम, गोधान्याभिरतायां, सत्यवादिन्याम्, गुणवत्याम्, पतिव्रतायाम, कन्यायाम्, चानिशं वसामि। एवं यानेषु, भूषणेषु, यज्ञेषु, वर्षत्सु मेघेषु, शरत्कालनक्षत्रवीथीषु, गोष्ठेषु, फुल्लोत्पलपङ्कजेषु सरस्सु, तपस्विसिद्धद्विजसेवितासु नदीषु, मदोत्कटे मातङ्गे, धेनौ, वृषभे, नरेन्द्रे, सिंहासने चाहमनवरतं वसामि। परं त्वहमेषु भावेन वसामि। तस्मादेव तत्र धमार्थकामा यशश्चाभिवर्धन्ते। श्रीमहाविष्णौ त्वहं मूर्तिमती सततमेकमना वसामि। नास्तिकादिषु तु नाहं भावेनापि वसामि" इति। तस्मादस्मासु यथा लक्ष्मीकटाक्षो निपतेत्तथा वर्तितव्यम्॥

LESSON XVI (षोडशः पाठः)

## ॥ स्वदेशवासः श्रेयान् ॥

पुरा कस्मिंश्चिद्देशे चित्राङ्गो नाम सारमेय आसीत् । तत्र कदाचिदनावृष्ट्या दुर्भिक्षमजायत । तदा आहाराभावात्सारमेयादयो मृतप्राया जाताः । तदा चित्राङ्गः क्षुधार्तो दुर्भिक्षभयाद्देशान्तरं गतः । तत्र च कस्मिंश्चिन्नगरे कस्य चिद्विप्रस्य गृहिण्याः प्रमादेन प्रतिदिनं गृहं प्रविश्य स विविधान्यन्नानि भक्षयन् परां प्रीतिमभजत् । परं तु स यदा तद्गृहाद्बहिर्निष्क्रामति तदाऽन्ये सारमेयास्सर्वेऽपि मिळित्वा तं परिवार्य सर्वाङ्गं दंष्ट्राभिर्विदारयन्ति स्म । ततस्स कुक्कुर एवमाचिन्तयत् । "अहो ! वरं स्वदेशवासः यत्र दुर्भिक्षेऽपि सुखेन स्थातुं शक्यते । तत्र न कोऽपि युद्धं करोति । एवंरूपा स्वजातिहिंसा च नास्ति । तस्मात्सत्वरं स्वनगरमेव गच्छामी" ति । एवमालोच्य सद्यः स्वदेशं

प्रत्याजगाम । अथ देशान्तरात्समायातमेनं वीक्ष्य सर्वे स्वजनास्सारमेयाः समागत्य श्वानमेवमपृच्छन् । “ भोश्चित्राङ्ग ! कथयास्माकं को वा देशान्तरे विशेषः? । स च देशः कीदृक् ? । किं चेष्टितं लोकस्य । क आहारः । कश्च व्यवहारस्तत्रे ” ति । स आह—“किं वा कथयामि विदेशविशेषम् । सुभिक्षवान् देशः । पौरयोषितामनवधानता च बलवती । परन्तु स्वजातिरेव महतीं हिंसां करोतीत्येक एव दोषः ” इति । तस्मात्स्वदेशे स्वगृहवासस्सर्वोत्कृष्ट इति सिद्ध्यति ॥

LESSON XVII (सप्तदशः पाठः)

## ॥ वत्सनाभमुनिः ॥

पुरा वत्सनाभनामा कश्चन मुनिरासीत् । स तीव्रं तपश्चचार । तदा तस्योपरि महान् वल्मीकः प्रादुर्भूय तं तिरोदधे । तीव्रेण तपसा

संजातोऽग्निर्लोकान्सर्वानपि दग्धुमारभत। मेघवाहनःभीतभीतस्तपो विहन्तुमैच्छत्। तस्याज्ञया मेघाः सप्तदिनानि जलमजस्रं वर्षन्ति स्म। महता वर्षेण अशनिना च सन्ताडितः स वल्मीकः विशीर्यते स्म। तदा धर्मः यथा वृष्टिस्तदुपरि न पतेत्तथाकर्तुं माहिषं महद्रूपमास्थायस्वदेहेन तं छादयति स्म। अपगते च वर्षे स तं मुनिं विहाय तेनैव रूपेणाधावत्। तदा स तपोनिधिर्लोचने उन्मील्य सर्वा दिशः विलोकयामास। सर्वां पृथिवीं सलिलेन परिप्लुतां समीक्ष्य सञ्जातविस्मयः "वर्षात्केनाहमभिरक्षितः" इति चिन्तयन्नेव समीपे वर्तमानं महिषमपश्यत्। दृष्ट्वैवमचिन्तयत्। "अहो! तिर्यग्योनौ जातस्याप्यस्येदृशं धर्मे वात्सल्य" मिति। एवं विचिन्त्य पुनरप्येवमचिन्तयत्। महिषोऽयमतिपीवरो दृश्यते। तस्मान्मम चिरमुपोषितस्याहारो

भवितुमर्हतीति । एवं चिन्तयतस्तस्य पश्चाद्धर्मानुसारिणी बुद्धिरुत्पन्ना । " नितान्तमुपकृतवन्तं महिषं हन्तुमिच्छतः कृतघ्नस्य मे प्राणपरित्यागं विना नास्ति निष्कृति" रिति । एवं निश्चित्य मेरुपर्वतात्पतनाय तच्छिखरमारुरोह । तदा धर्मस्तमुपरुद्ध्य इत्थमकथयत् । निस्संगेनान्तरात्मना प्राणान् परित्यक्तुमुद्यतस्य तव विषये अतीव प्रीतोऽस्मि । विशुद्धहृदयं त्वादृशं कमपि न पश्यामि । स्थानादस्मान्निवर्तस्वेति । अनया कथया कृतोपकारे अपकर्तुमिच्छापि पापायेत्यवगम्यते ॥

LESSON XVIII (अष्टादशः पाठः)

## ॥ श्रीरामचरितम् ॥

हनुमान्:—

अथ दाशरथिर्वीरो रामो नाम महाबलः ।
विष्णुर्मानुषरूपेण चचार वसुधातलम् ॥ १ ॥

स पितुः प्रियमन्विच्छन् सहभार्यस्सहानुजः ।
सधनु र्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः ॥२॥
तस्य भार्या जनस्थानाच्छलेनापहृता बलात् ।
राक्षसेन्द्रेण बालिना रावणेन दुरात्मना ॥ ३ ॥
सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा ।
वञ्चयित्वा नरव्याघ्रं मारीचेन तदानघ । ४ ॥
हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः ।
दृष्टवान्शैलशिखरे सुग्रीवं वानरर्षभम् ॥ ५ ॥
तेन तस्याभवत्सख्यं राघवस्य महात्मनः ।
स हत्वा वालिनं राज्ये सुग्रीवमभिषिक्तवान् ॥ ६ ॥
स राज्यं प्राप्य सुग्रीवस्सीतायाः परिमार्गणे ।
वानरान्प्रेषयामास शतशोऽथ सहस्रशः ॥ ७ ॥
ततो वानरकोटीभिस्सहितोऽहं नरर्षभ ।
सीतां मार्गन्महाबाहो प्रयातो दक्षिणां दिशम् ॥८॥
ततः प्रवृत्तिस्सीताया गृध्रेण सुमहात्मना ।
संपातिना समाख्याता रावणस्य निवेशने ॥९॥
ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।

शतयोजनविस्तारमर्णवं सहसाप्लुतः ॥ १० ॥
अहं स्ववीर्यादुत्तीर्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुरसुतोपमाम् ॥११॥
दृष्टवान्भरतश्रेष्ठ रावणस्य निवेशने
समेत्य तामहं देवीं वैदेहीं राघवप्रियाम् ॥१२॥
दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणाम् ।
प्रत्यागतश्चास्य पुनर्नाम तत्र प्रकाश्य वै ॥१३॥
मद्वाक्यं चावधार्याशु रामो राजीवलोचनः ।
अबद्धपूर्वमन्यैश्च बध्वा सेतुं महोदधौ ॥ १४ ॥
वृतो वानरकोटीभिस्समुत्तीर्णो महार्णवम् ।
ततो रामस्तु वीर्येण हत्वा तान्सर्वराक्षसान् ॥१५॥
रणे तु राक्षसगणं रावणं लोकरावणम् ।
निशाचरेन्द्रं हत्वा तु सभ्रातृसुतबान्धवम् ॥१६॥
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणम् ।
धार्मिकं भक्तिमन्तं च भक्तानुगतवत्सलम् ॥१७॥
प्रत्याहृत्य ततस्सीतां नष्टां वेदश्रुतिं यथा ।
स तया सहितः साध्व्या पत्न्या रामो महायशाः ॥

गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः।
अध्यावसत्ततोऽयोध्यामयोध्यां द्विपतां गणैः॥
ततः प्रतिष्ठितो राजन्नाज्ये नृपतिसत्तमः।
दशवर्षसहस्राणि दशवर्षशतानि च।
राज्यं कारितवान्रामस्ततः स्वभवनं गतः॥२०॥

महाभारतवनपर्वान्तर्गततीर्थयात्रापर्वस्थितहनुमद्भीमसंवादस्थम्

## LESSON IX (एकोनविंशः पाठः)

## ॥ पौण्ड्रकवासुदेवः ॥

पुण्ड्रदेशे वासुदेव इति कश्चन राजा बभूव। स काशीं परिपालयामास। कदाचित्पामरा नरास्तमवलोक्य त्वमेव भूभारनिराकरणाय अवतीर्णो वासुदेवः, नतु कृष्णः इत्यवदन्। स नृपतिस्तथाभूतमात्मानं मेने। तदनु विष्णुचिह्नं शंखचक्रादिकं सर्वमपि कारयित्वा धारयति स्म। अनन्तरं भगवते कृष्णाय दूतं

प्रेषयामास । दूतः कृष्णसमीपमागत्य इत्थमवदत् । मम प्रभुस्त्वामेवमाज्ञापयति । "चक्रादिकं मदीयं चिह्नं नाम च परित्यज्य प्राणरक्षणाय मत्समीपमागत्य त्वया प्रणतिः कर्तव्या" इति । एवमावेदितो जनार्दनस्तं प्रतीत्थमब्रवीत् । "वचनमिदं त्वत्स्वामिने निवेदय । "त्वद्वचनार्थो मया विज्ञातः । यथोक्तं गृहीतचिह्नोऽहं तव पुरमागमिष्यामि । मम चिह्नं चक्रं त्वयि परित्यक्ष्यामि" इति । एवमभिहितो दूतो गतः । अथ कृष्णो गरुडमारुह्य पौण्ड्रकपुरं जगाम । राजा कृष्णागमनं निशम्य महता बलेन परिवृतस्तदभिमुखमागच्छत् । भगवांस्तु स्यन्दने स्थितं शंखचक्रगदाशार्ङ्गपाणिं, पीताम्बरं, गरुडाङ्कितध्वजं, वक्षस्थलनिहितश्रीवत्सं, किरीटकुण्डलधारिणं, तं समीक्ष्य गम्भीरं हसति स्म । क्षणेन च तस्य बलं चतुरङ्गमपि शार्ङ्गतो निर्गतैश्शरैर्जघान । पौण्ड्रकं वीक्ष्यैव-

मकथयत् । "दूतमुखेन नाम, चिह्नं च उत्सृजेति यत्त्वयोक्तं तत्तथाकरोमि । चक्रमेतदुत्सृष्टम् । इयं गदापि विसर्जिता । एष सुपर्णश्च उत्सृष्टः । स ते ध्वजमारोहत्विति । " एवं अभिधाय चक्रादिकं प्राहिणोत् । चक्रं तु पौण्ड्रकं विलिखति स्म । गदा तु तं पातयामास । गरुडस्तु तद्ध्वजं भञ्जयामास । ततस्स राजा भगवता सह युद्धमकरोत् । कृष्णस्तीक्ष्णैः शरैर्लीलया सानुचरं तमवधीत् । महदपचारः प्राणनाशाय भवति । तस्मात्स परिहर्तव्यः ॥

LESSON XX (विंशः पाठः)

## ॥ नरकचतुर्दशी (दीपावळी) ॥

द्वापरयुगे प्राग्ज्योतिषपुरे भूमिपुत्रो नरको नाम दानव आसीत् । स दैत्यैर्बहुभिः परिवृतस्सर्वान् लोकानपि पीडयामास । देवेन्द्रस्तत्पीडामसहमानो द्वारकां गत्वा भगवन्तं श्रीकृष्णं प्रति

तदीयं दुश्चेष्टितं सर्वं विज्ञापयामास । अथ भगवान् सत्यभामया सह गरुडमारुह्य प्राग्ज्योतिषपुरमागत्य युद्धाय सन्नद्धान् नरकासुरसैनिकान् प्रथमतो जघान । अनन्तरं नरकामात्यं मुराह्वयमसुरं यमलोकाय प्राहिणोत् । ततः किंचित्कालं नरकेण सह युद्धमकरोत् । अन्ततस्तस्य शिरश्छेत्तुं चक्रमाददे । तदा नरकः स्वमरणं निश्चित्य श्रीकृष्णसमीपे वरमेकमयाचत । "भगवन्! मया प्रजाः सर्वा अपि पीडिताः । ततो न कदापि सुखमनुभवन्ति स्म । अतो मदीयमरणातिथौ चतुर्दश्यामस्यां प्रतिवत्सरं लोको निखिलोऽप्यभ्यङ्गस्नानादिकं कृत्वा सुखं वर्तताम् । एवं वर्तमानस्य लोकस्य नरकबाधा मा भवतु । संपच्च भवत्वि" ति । दयानिधिर्भगवांस्तथैवास्त्वित्यभिधाय चक्रेण तस्य शिरश्चिच्छेद । ततः प्रभृति प्रतिवत्सरं तस्मिन्दिने तथैव समाचरन्ति जनाः । धर्मशास्त्रकर्तारस्त्वेव-

माचक्षते—"तुलामासीयकृष्णचतुर्दश्यां रात्राव-न्त्ये यामे मानवस्सह मित्रबन्धुजनैस्तैलेनाभ्य-ज्योष्णेन वारिणा स्नायात् । ततो नूतनवस्त्रा-दिकं स्वयं धृत्वा अन्यांश्च धारयेत् । अभ्यज्य स्नातानां नृणां, देवतानां, गवां, तुरगाणां च दीपावल्या नीराजनं कारयेत । ततो भगवत्पूजां विधायेष्टबन्धुजनैस्सह चित्रान्नानि भक्ष्यादीनि च भुञ्जीत । एवं तस्मिन्दिने वर्तमानो नरो नरकं न पश्येत् । संपदमासादयेच्च" ति । दिनेऽस्मिन्विष्णुना नरकस्य हननात्, अभ्यज्य स्नातानां नरकाभावाच्च, अस्य दिनस्य नरकच-तुर्दशीति संज्ञा कृता । दीपैर्नीराजनकरणाद्दी-पावळिरिति च । तस्मान्नरकभीरुभिर्लक्ष्मीकामैः सर्वैरपि निर्दिष्टकाले अभ्यङ्गस्नानादिकमाचर-णीयम् ॥

LESSON XXI (एकविंशः पाठः)

## ॥ नृगः ॥

पुरा नृगो नाम कश्चन राजा बभूव । स यथावत्प्रजाः परिपालयति स्म । कस्मिंश्चिद्दिने ग्रामान्तरगतस्य कस्यचिद्विप्रस्य धेनुरेका विस्मृतनिजमार्गा राज्ञो गोष्ठमागता । तां च गोपाला राज्ञो गवामन्यतमामगणयन् । दानशौण्डः स राजा तां कस्मैचिद्विप्राय ददौ । ग्रामान्तरादागतस्स गोस्वामी स्वगृहे गामदृष्ट्वा तत्र तत्रान्विष्यान्ते तस्य विप्रस्य गेहे तामपश्यत् । दृष्ट्वा च कुपितः "कुतो मम गामपहृतवानसी" ति तमपृच्छत् । स च "राज्ञा मह्यमियं दत्ते" ति प्रत्यवदत् । तावुभौ मिथो विवदमानौ राजसमीपं गत्वा कलहस्य कारणमावेदयताम् । नृपश्च सर्वं श्रुत्वा प्रतिग्रहीतारं प्रतीत्थमकथयत् । "स पशुस्तत्स्वामिने दीयताम् । तदर्थं गवां दशसहस्रं दास्यामी" ति । स तु "मातृहीनं

कृशं मम पुत्रं क्षीरप्रदानेन मा गौः पोषयति । शान्ता वत्सला च । तस्मान्नाहं दातुं प्रभवामी" त्युक्त्वा गृहमगच्छत् । तदनु राजा गोस्वामिनं प्रत्येवमुवाच । "तत्पश्चार्थं गवां शतसहस्रं विनिमयेन प्रयच्छामि प्रतिगृह्यता" मिति । सतु "आत्मरक्षणे समर्थोऽहं न राजस्वं प्रतिग्रहीतुमिच्छामि । सैव धेनुर्दीयता" मित्युक्त्वा राज्ञा दत्तान् रजतस्यन्दनादीनप्रतिगृह्यैव स्वगृहमगच्छत् । पश्चात्स नरपतिः कालधर्ममवाप्य पितृलोकं गत्वा धर्मराजसमीपं गतवान् । यमस्तु तं पूजयित्वैवमवदत् । "त्वदनुष्ठितानि पुण्यानि कर्माणि बहूनि । अस्ति किंचित्पापमज्ञानकृतेन विप्रस्वादानेन जातं । तत्फलं किं पूर्वमनुभवितुमिच्छस्युत पश्चादि" ति । तदा स नृपतिः "कष्टं पूर्वमनुभवितुमिच्छामी" ति वदन्नेव भूमौ कस्मिंश्चित्कूपे महान्कृकलासो भूत्वा अधःशीर्षः पतितः । पतनसमये "वर्षसहस्रान्ते

दुष्कर्मनाशानन्तरं वासुदेवस्त्वां समुद्धरिष्यति। ततः स्वकर्मणार्जितान् शाश्वतान् लोकान् लप्स्यसे" इति धर्मराजोऽब्रवीत्। राजा च तदशृणोत्। ततो वर्षसहस्रान्ते स वासुदेवेन समुद्धृतः आत्मनः उदन्तं तस्मै विज्ञाप्य नमस्कृत्य तेनानुज्ञातो दिव्यं विमानमारुह्य दिवं जगाम। तस्मात्परस्वापहारो दूरीकर्तव्यः ॥

LESSON XXII (द्वात्रिंशः पाठः)

## ॥ गुरुभक्तिमहिमा ॥

पुरा एकलव्यो नाम कश्चन निषाद आसीत्। स कदाचित् द्रोणाचार्ये धनुर्विद्यामभ्यसितुं तत्समीपमाजगाम। द्रोणस्तु पाण्डवासंमत्या तं शिष्यं न प्रतिजग्राह। परन्तु समागतं तं समीक्ष्य "शिष्योऽसि नैषादे। प्रयोगो बलवत्तरो भवतु। गृहानेव निवर्तस्व" इत्यनुगृहीतवान्। स तु तस्यपादौ शिरसा निपीड्य वनं

प्रत्याजगाम। आगत्य च मृण्मयीं द्रोणप्रतिकृतिं कृत्वा तस्यामाचार्यवृत्तिमकरोत्। तस्याःपुरतो भक्त्या नियमेन समाहितःइष्वस्त्रप्रयोगमभ्यसितवान्। क्रमेण स धनुर्विद्याविचक्षणः, बाणसन्धान, तद्विमोचन,तदुपसंहारेषु लाघवं परमं प्राप। अस्मिन्नवसरे पाण्डवा मृगयासाधनानि गृहीत्वा तद्वनमाजग्मुः। तदा अन्यःकश्चन नरो यदृच्छया कंचन श्वानमादाय पाण्डवाननुजगाम। तेषु सर्वेषु मृगयाव्यापारव्यग्रेष्वसौ श्वा नष्टमार्गः एकलव्यं प्रत्यागत्य बुक्कति स्म। विजने वने नष्टस्य बुक्कतश्शुनश्शब्दं श्रुत्वा तस्य मुखे सप्त शरान् स लाघवादर्पयामास। स तु श्वा शरपूर्णास्यः पाण्डवान् प्रत्याजगाम। तं दृष्ट्वा पाण्डवाः परमं विस्मयं गताः, प्रयोक्तुर्लाघवं प्रशशंसुः। आत्मन्यवज्ञां चाकुर्वन्। ततस्तमन्विष्यन्तः पाण्डवा एकलव्यं दृष्ट्वा को भवान्? कस्य शिष्य इति चापृच्छन्। स निषाद आत्मानं निषादाधिप-

तैर्हिरण्यधनुषः सुतं द्रोणशिष्यं च निवेदयामास। अथ पाण्डवा वनान्निवृत्य यथावृत्तं सर्वं द्रोणाय विज्ञापयामासुः। ततश्चार्जुनो रहसि द्रोणमित्थमपृच्छत्। " आचार्य ! भवता त्वद्विशिष्टशिष्यो मे न भविष्यती " त्युक्तं किल ? । तत्सत्यं चेत्कस्मान्मद्विशिष्टो महावीरश्शिष्योऽन्योऽस्ती " ति। द्रोणस्तु मुहूर्तमालोच्य सव्यसाचिना सह निषादसकाशमागतवान्। तत्र च मलादिग्धाङ्गं जटिलं चीरवाससं धनुष्पाणिं सततं शरानस्यन्तमेकलव्यं ददर्श। एकलव्यस्त्वान्तिकमागतमाचार्यं दृष्ट्वा तस्य पादयोः प्रणमति स्म। अनन्तरमात्मानं तच्छिष्यं विज्ञापयामास। ततो द्रोणः " एकलव्य ! यदि मम शिष्योऽसि दक्षिणा मे प्रदीयता" मित्यब्रवीत्। स च "किमपेक्षितं भगवतः। आज्ञापयतु मां गुरुः" इत्यवदत्। द्रोणस्तु तव दक्षिणः करांगुष्ठो दीयता" मित्यादिदेश। स च दारुणं तद्वचः-

श्रुत्वाप्यात्मनः प्रतिज्ञां परिपालयितुकामो हृष्टमना अङ्गुष्ठं छित्वा तस्मै समर्पयामास । अनन्तरमर्जुनो विगतज्वरो बभूव । द्रोणश्च परां प्रीतिमभजत् । भो बालाः! पश्यत । अयं गुरुभक्त्या विद्यामवाप । तदर्थमङ्गुष्ठं च ददौ । अहो! गुरुभक्तेर्महिमा !! ॥

LESSON XXIII (त्रयोविंशः पाठः)

## ॥संवादः॥

[शाकुन्तले षष्ठोऽङ्कः]

[ततः प्रविशति नागरिकः स्यालः, पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च]

रक्षिणौ—(ताडयित्वा) अरे कुंभीलक! कस्मिन् त्वया एतन्मणिबन्धनोत्कीर्णनामधेयाङ्कितं राजकीयमङ्गुलीयकं समासादितं? ।

पुरुषः—(भीतिं नाटयित्वा) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

प्रथमः—किं खलु शोभनो ब्राह्मण इति कृत्वा प्रतिग्रहस्ते दत्तः?

पुरुषः—शृणुत इदानीं। अहं शक्रावतारवासी धीवरः।

द्वितीयः—पाटच्चर! किं अस्माभिः जातिः पृष्टा?

स्यालः—कथयतु सर्वं अनुक्रमेण। मा एनमन्तरा प्रतिबध्नीतम्।

उभौ—यदावुत्त आज्ञापयति।

स्यालः—कथय कथय।

पुरुषः—अहं जालोद्गालादिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।

स्यालः—(प्रहस्य) विशुद्ध इदानीं आजीवः।

पुरुषः—भर्तः! मैवं।

अथ एकस्मिन् दिवसे खण्डशो लोहितमत्स्यो मया कल्पितः। तदा तस्य उदराभ्यन्तरे

विक्रयाय दर्शयन् गृहीतो भावमिश्रैः। मारयत वा मुञ्चतवा। इयमस्यागतिः।

स्यालः---जानुक! विस्रगन्धी गोखादी मत्स्यबन्ध एव। तावत् निस्संशयं अङ्गुलीयकं अस्य विमर्शनीयम्। राजकुलमेव गच्छामः।

रक्षिणौ---तथा। गच्छ अरे ग्रन्थिभेदक!

[इति सर्वे परिक्रामन्ति]

स्यालः---सूचक! अमुं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतम्। यावत् इदं अङ्गुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतिगृह्य निर्गच्छामि॥

उभौ---प्रविशतु आर्यः स्वामिप्रसादाय

[निष्क्रान्तः स्यालः]

प्रथमः---जानुक! चिरायते खलु आवुत्तः।

द्वितीयः---ननु अवसरोपसर्पणीया राजानः

प्रथमः—जानुक! स्फुरतो मे हस्तौ अमुष्य वध्यसुमनसं पिनद्धुम्। [इति पुरुषं निर्दिशति।]

पुरुषः—नार्हति भावः अकारणमारणो भवितुम्।

द्वितीयः—(विलोक्य) एषोऽस्माकं स्वामी लेखपत्रे गृहीत्वा राजशासनमागच्छति। शुनोमुखं वा द्रक्ष्यति, गृध्रबलिः वा भविष्यति।

[प्रविश्य]

स्यालः—सूचक! मुच्यतां एष जालोपजीवी। उपपन्नः किल अस्य अङ्गुलीयस्य आगमः।

प्रथमः—यथा भणति भवान्। जानुक! एष यमसदनं दृष्ट्वा प्रतिनिवृत्तः।

[इति पुरुषं परिमुक्तबन्धनं करोति]

पुरुषः—(स्यालं प्रणम्य) भर्तः! तव केरकं मे जीवितम्।

स्यालः—एष भर्त्रा अङ्गुलीयकमूल्यसंमितः पारितोषिको दत्तः। (इति पुरुषाय स्वं प्रयच्छति)

पुरुषः——(सप्रणामं प्रतिगृह्य) भट्टारकेण अनुगृहीतोऽस्मि।

सूचकः——ते नाम अनुगृहीताः ये शूलात् अवतार्य हस्तिस्कन्धे प्रतिष्ठापिताः।

जानुकः——आवुत्त! राज्ञः परितोषं कथय। तेन खलु अङ्गुलीयेन भर्तुः शर्मदेन भवितव्यम्।

स्यालः——न तस्मिन् महार्ह रत्नं भर्तुः बहुमतमिति तर्कयामि। तस्य दर्शनेन किमपि अभिमतं भर्तुः स्मृतम्। मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।

सूचकः——सेवितं नाम आवुत्तेन।

स्यालः——ननु भण अमुष्य कृते मत्स्यशत्रोः इति।

[इति पुरुषं असूयया पश्यति]

पुरुषः——इतोऽर्धं भट्टारक! युष्माकं सुमनोमूल्यं भवतु।

जानुकः——एतत् युज्यते।

स्यालः—धीवर। महत्तरः प्रियवयस्य इदानीं संवृत्तः। तस्मात् कादम्बरीसाक्षिकं अस्माकं प्रथमसौहृदं इष्यते। तस्मात् शुण्डिकाभवनमेव गच्छामः।

[इति निष्क्रान्ताः सर्वे]

XXIV (चतुर्विंशः पाठः)

## ॥ संवादः ॥

(उत्तररामचरिते चतुर्थोऽङ्कः)

कौसल्या—जात अस्ति ते माता? स्मरसि वा तातम्?।

लवः—नहि।

कौसल्या—ततः कस्य त्वम्?।

लवः—भगवतः सुगृहीतनामधेयस्य वाल्मीकेः।

कौसल्या—अयि जात कथितव्यं कथय।

लवः—एतावदेव जानामि।

(नेपथ्ये)

भो भोः सैनिकाः! एषखलु कुमारश्चन्द्र-केतुराज्ञापयति—न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति ।

लवः—आर्य! क एष चन्द्रकेतुर्नाम ।

जनकः—जानासि रामलक्ष्मणौ दाशरथी ?।

लवः—एतावेव रामायणकथापुरुषौ ।

जनकः—अथ किम् ।

लवः—तत्कथं न जानामि ।

जनकः—तस्य लक्ष्मणस्यायमात्मजश्चन्द्र-केतुः ।

लवः—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

अरुन्धती—आविष्कृतं कथाप्रावीण्यं वत्सेन ।

जनकः—(विचिन्त्य) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत्पश्यामः, तेषां दशरथस्य

पुत्राणां कियन्ति किंनामधेयान्यपत्यानि केषु दारेषु प्रसूतानि ।

लवः—नायं कथाविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

जनकः—किं न प्रणीतः कविना ? ।

लवः—प्रणीतो न प्रकाशितः ।

कौसल्या—जात! भ्रातापि तेऽस्ति ? ।

लवः—अस्त्यार्यः कुशो नाम ।

कौसल्या—ज्येष्ठ इति भणितं भवति ।

लवः—एवमेतत्, प्रसवानुक्रमेण स किल ज्यायान् ।

जनकः—किं यमावायुष्मन्तौ ? ।

लवः—अथ किम् ।

जनकः—वत्स ! कथय कथाप्रपञ्चस्य कियान्पर्यन्तः ? ।

लवः—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्न-

प्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

(प्रविश्य संभ्रान्ता वटवः)

कुमार ! कुमार ! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनास्माभिः स्वयं प्रत्यक्षीकृतः ।

लवः—अश्वोऽश्व इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते । तद्ब्रूत कीदृशः ?।

वटवः—अये ! श्रूयताम् ।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा-
न्किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि
यामः । (इत्यजिने हस्तयोश्चाकर्षन्ति)

लवः—(सकौतुकोपरोधविनयम्) आर्याः! पश्यत । एभिर्नीतोऽस्मि (इति त्वरितं परिक्रामति)

वटवः—पश्यतु कुमारस्तावदाश्चर्यम् ।

लवः—दृष्टमवगतं च। नूनमाश्वमेधिकोऽयमश्वः।

वटवः—कथं ज्ञायते ?।

लवः—ननु मूर्खाः, पठितमेव हि युष्माभिरपि तत्काण्डम। किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः। तत्प्रायमेवान्यदपि दृश्यते।

॥ श्रीः ॥

महाकविश्रीकाळिदासकृतौ रघुवंशे

## ॥ दशमः सर्गः ॥

पृथिवीं शासतस्तस्य पाकशासनतेजसः।
किंचिदूनमनुनर्धेः शरदामयुतं ययौ॥ १

न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम्।
सुताभिधानं स ज्योतिः सद्यश्शोकतमोपहम्॥ २

अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ ७

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९

प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १०

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११
दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३
योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकान्मुनीन् ॥ १४
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५
नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ १६
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २०

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ? ॥

शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥

बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयस्संनिवृत्तये ॥ २७
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ?॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९
उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्योऽव्यतिरिच्यन्ते दूराणि चरितानि ते ॥
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१
महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२
इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥
तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४

अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥ ३५
पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
वभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६
वभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७
“ जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ ।
आङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८
विदित तप्यमानं च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९
कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४०
स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥
स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोस्सोढं चन्दनेनेव भोगिनः ॥ ४२

"धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः" ॥ ४७

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९

अथ तस्य विशां पत्युरन्ते काम्यस्य कर्मणः ।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५०

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनाऽपि दुर्वहम् ॥ ५१
प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२
अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।
प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ५३
स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४
अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५
ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६
साहि प्रणयवत्यासीत्सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिष्यन्दरेखयोः ॥ ५७
ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८

सममापन्नसत्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारंभाः सस्यानामिव संपदः ॥ ५९
गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
जलजासिगदाशार्ङ्गचक्रलांछितमूर्तिभिः ॥ ६०
हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१
बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया । ६२
कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३
ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः ।
मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः । ६४
विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५
अथाग्रमहिषी राज्ञः प्रसूतिसमये सती ।
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६

राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७

रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७०

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३

कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४

दशाननकिरीटेभ्यस्तत्क्षणंराक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५

पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः ।
आरंभं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६

सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ७७

कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ।
मुमूर्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९

परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्योतयामासुर्देवारण्यमिवर्तवः ॥ ८०

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक् । ८४

गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६

इति रघुवंशे दशमः सर्गः ।

|| श्रीः ||

Poetical Selections.

|| सुभाषितःपद्यानि ||

माता रामो मत्पिता रामचन्द्रो
भ्राता रामो मत्सखा राघवेशः ।
सर्वस्वं मे रामचन्द्रो दयालुः
नान्यं जाने नैवजाने न जाने॥ १ ॥

शर्वरी दीपकश्चन्द्रः प्रभातोद्दीपको रविः ।
त्रैलोक्यदीपको धर्मस्सुपुत्रः कुलदीपकः ॥ २ ॥

परिवर्तिनि संसारे मृतःकोवा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिं ॥ ३

यःप्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम ।
तन्मित्रमापदिसुखेच समक्रियं य-
देतत्त्रयंजगति पुण्यकृतो लभन्ते ॥ ४

रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना नशोभन्ते निर्गन्धा इव किंशुकाः॥ ५
सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत्सुखम् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्॥६
स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्रपूज्यते ॥ ७
उत्पन्नपश्चात्तापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वंस्यात्कस्य न स्यान्महोदयः ॥ ८
अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ९
यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ १०
अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नै र्बध्यन्ते मत्तदन्तिनः ॥ ११
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १२

मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरंगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥ १३

यत्र विद्वज्जनो नास्ति श्लाध्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोपि द्रुमायते ॥ १४

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्तव्यो धर्म संङ्ग्रहः ॥

अर्था गृहे निवर्तन्ते श्मशाने मित्रबान्धवाः ।
सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति ॥ १६

यावत्स्वस्थोह्ययं देहो यावन्मृत्युश्चदूरतः ।
तावदात्महितं कुर्याः प्राणान्ते किं करिष्यसि ॥

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्धकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १८

उद्यमेनहि सिध्यन्ति कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

समुद्रमथने लेभे हरिर्लक्ष्मीं हरो विषम् ।
भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् ॥

उत्तमं स्वार्जितं वित्तं मध्यमं पितुरार्जितम् ।
अधमं भ्रातृवित्तं च स्त्रीवित्तमधमाधमम् ॥ २१

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ २२

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीयागतिर्भवति ॥

न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकं ॥ २४

अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानोहि महतां धनम् ॥

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ २६

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥ २७
जनिताचोपनेताच यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ २८
राजपत्नी गुरोः पत्नी मित्रपत्नी तथैवच ।
पत्नीमाता स्वमाताच पञ्चैता मातरः स्मृताः ॥
सत्यं माता पिता ज्ञानं धर्मो भ्राता दया सखी ।
क्षान्तिः पत्नी शमः पुत्रः षडेते मम बान्धवाः॥
अङ्गं गलितं पलितं मुण्डं
दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं
तदपि नमुञ्चत्याशापिण्डम् ॥ ३१
अखिलेषु विहंगेषु हन्तस्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ ३२

"सत्यान्नास्ति परो धर्मः"

PRINTED AT THE HINDI PRACHAR PRESS, TRIPLICANE